## ॥ संक्षिप्त नान्दी श्राद्ध ॥

नान्दी श्राद्ध में विश्वेदेवा के लिए कुशा पर गांठ देकर पत्तेपर रख देवे, दूसरे पत्ते पर माता पितामही प्रपितामही के निमित्त तीन कुशाओं पर गांठ देवें, तीसरे पत्ते पर पिता पितामह प्रपितामह के निमित चौथे पत्ते पर मातामही प्रमातामही बृद्धप्रमातामही तथा पांचवे पत्ते पर मातामह प्रमातामह बृद्ध प्रमातामह के पूजन हेतु कुशा पर गांठ लगाकर रख देवे।

**संकल्प** -

**ॐ तत्सदद्य० मासोत्तमे ऽमुकमासे अमुकपक्षे अमुकतिथौ अमुक वासरे अमुककर्मांगी भूतं अभ्युदयिक श्राद्धमहं करिष्ये।**

**ध्यान**-

**श्राद्धकाले गया ध्यात्वा ध्यात्वा देव गादाधरम्।**
**मनसा च पितृनध्यात्वा श्राद्धकर्मसमारभेत्॥**

तिलश्राद्ध स्थल में छोड़े -

**नमो नमस्ते गोविन्द पुराण पुरुषोत्तम।**
**इंद श्राद्धं ऋषिकेश रक्षतो सर्वतोदिशि॥**

**पितृगायत्री स्मरण** -

**देवताभ्य पितृभ्यश्च महायोगीभ्य एव च।**
**नमः स्वाहायै स्वधायै नित्यमेव नमो नमः॥**

**आवाहन** -

**ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन् पितरोऽमीमदन्त पितरो ऽतीतृपन्त पितरः पितरः शुन्धध्वम्।**

**पूजन** -

**ॐ सत्यवसु सञ्ज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ**
**ॐ भूर्भुवः स्वः पाद्यं स्वाहा अनामयं च वृद्धि।**
**ॐ अमुक गोत्राः मातृ पितामही प्रपितामह्य नान्दीमुख्याः**
**ॐ भूर्भुवः स्वः इदं वः पाद्यं स्वाहा नामयं च वृद्धि।**

ॐ अमुकगोत्राः पितृ पितामह प्रपितामहाः नान्दी मुखाः ॐ भूर्भवः स्वः इदंवः पाद्यं स्वाहा नामयं च वृद्धि। ॐ अमुक गोत्राः मातामह प्रमातामह वृद्ध प्रमातामहा पत्निसहिताः नान्दी मुखाः ॐ भूर्भुवः स्वः इंद पाद्यं स्वाहा नामयं च वृद्धि।

**ॐ श्री गणेशाम्बिके ॐ भूर्भुवः स्वः इदं वः पाद्यं स्वाहा नामय च वृद्धिः।**

इस प्रकार कह कर पत्तों के ऊपर रखी कुशाओं पर जल डालें, प्रत्येक कुशाओं पर गन्धाक्षत पुष्प भी डालें, दीपक दिखाये नैवेद्य एवं दक्षिणा भी चढायें।

**युग्म ब्राह्मणों हेतु आमान्न संकल्प -**

ॐ सत्यवसु संज्ञकाः विश्वेदेवाः नान्दीमुखाः ॐ भूर्भुवः स्वः युग्म ब्राह्मण भोजन पर्यन्तं दास्यमानमन्न यथाशक्ति सोपस्करं स्वाहा नामयं च वृद्धिः युग्म भोजन आमान्नं नैवेद्यं तन्निष्क्रयं दक्षिणां च दातुसमुत्सृजेत्।।

**आशीष ग्रहण**- यजमान पितरो से आशीर्वाद मांगे ब्राह्मण प्रतिवचन कहें-

गोत्रं नो वर्द्धताम् - वर्द्धताम् वो गोत्रम्।
दातारोऽभिवर्द्धन्ताम् - अभिवर्द्धन्ताम् वो दातारः।
वेदाश्चनोऽभिवर्द्धन्ताम् - अभिवर्द्धन्ताम् वो वेदाः।
सन्ततिऽभिवर्द्धन्ताम् - अभिवर्द्धन्ताम् वः सन्तति।
श्रद्धा च नो मा व्यगमत् - माव्यगमद्ध - श्रद्धाः।
बहुदेय च नो अस्तु - अस्तु वो बहुदेयम्।
अन्नं च नो बहुभवेत् - भवतु वो बहुअन्नम्।
अतिथीश्च लभेमहि - अतिथीं च लभध्वम्।
याचितारश्च नः सन्तु - सन्तु वो याचितारः।
एता आशिषः सत्याःसन्तु - संत्वेता सत्याः आशिषः।

**प्रार्थना –**

माता पितामही चैव　तथैव　प्रपितामही।
पिता　पितामहश्चैव　तथैव　प्रपितामहः॥
मातामहस्तत् पिता च प्रमातामहकादयः।
एतेभवन्तु सुप्रीताः प्रयच्छन्तु च मंगलम्॥
अनेनः कर्मणः नान्दी मुखः देवताः प्रीयन्ताम् नमः॥

## ॥ अथ नव ग्रह पूजनम् ॥

**विनियोग –**

आकृष्णेनेति मंत्रस्य हिरण्यस्तूपाङ्गिरा ऋषिः
त्रिष्टुप्छन्द सूर्यो देवता सूर्यावाहने पूजने विनियोगः।
ॐ ह्रां ह्रीं ह्रौं सः सूर्याय　नमः।

**सूर्य पूजनम –**

ॐ आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यंच।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्।
ॐ भूभुर्वः स्वः कलिंगदेशोद्भव काश्यपगोत्र रक्तवर्ण
भो सूर्य इहागच्छ, इहतिष्ठ सुप्रतिष्ठ वरदोभव,
मम पूजां　गृहाण श्री सूर्याय नमः।

**पाद्यादिभिः सम्पूज्य प्रार्थयेत् –**

ॐ जपाकुसुम संकाशं काश्यपेय महाद्युतिम्।
तमोऽरिं सर्व पापघ्नं प्रणतोऽस्मिदिवाकरम्।

**विनियोग –**

इमं देवा इति मंत्रस्य वरुण ऋषिः अग्निर्देवता
सोमावाहने पूजने विनियोग : ॐ श्रां श्रीं श्रौं सः चन्द्राय नमः।

**चन्द्र पूजनम् –**

ॐ इम्मदेवा असपत्न ँ सुवध्वं महते क्षत्राय महते ज्येष्ठ्याय महते

जानराज्यायेन्द्रियसेन्द्रियाय। इममममुष्य पुत्रममुष्ये पुत्रमस्ये विश एष वोमी राजा सोमोऽस्माकं ब्राह्मणाना ँ राजा। ॐ भूर्भुवः स्वः आत्रेयसगोत्र शुक्लवर्ण भो सोम इहागच्छ इह तिष्ठ सुप्रतिष्ठ वरदोभव। मम पूजां गृहाण श्री सोमाय नमः। सोममावाहयामि स्थापयामि पूजयामि। पाद्यादिभिः संपूज्य प्रार्थयेत् + दधिशंख तुषाराभं क्षीरोदार्णव संभवम्। नमामि शशिनं सोमं शम्भोर्मुकुट भूषणम्॥

**विनियोग –**

अग्निमूर्द्धा इति मंत्रस्य विरुपाङ्गिरस ऋषिः अग्निर्देवता भौमावाहने पूजने विनियोगः। ॐ क्रां क्री क्रौ सः भौमाय नमः।

**भौम पूजनम् –**

ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिब्या अयम्। अपाँरेता ँ सिजिन्वति। ॐ भूर्भुवः स्वः भारद्वाज गोत्र रक्तवर्ण भौम इहागच्छ इहतिष्ठ सुप्रतिष्ठ वरदो भव मम पूजां गृहाण श्री भौमाय नमः।

भौममावाहयामि स्थापयामि पूजयामि, पाद्यादिभिः

सम्पूज्य प्रार्थयेत् धरणीगर्भ संभूतं

विद्युत्कान्ति समप्रभम्। कुमारं शक्तिहस्तं च तं मङ्गल प्रणमाम्यहम्॥

**विनियोग –**

उद्बुध्य इति मंत्रस्य परमेष्ठी ऋषिः त्रिषुप्छन्दः

बुधोदेवता बुधावाहने पूजने विनियोगः।

ॐ ब्रां ब्रीं ब्रौं सः बुधाय नमः।

**बुध पूजनम् –**

ॐ उद्बुध्यस्वाग्ने प्रति जागृहित्वमिष्टापूर्ते स ँ सृजेथा गयं च। अस्मिन्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत। ॐ भूर्भवः स्वः आत्रेयसगोत्र हरितवर्ण भो बुध इहागच्छ इहतिष्ठ सुप्रतिष्ठ वरदोभव मम पूजां गृहाण श्री बुधाय नमः। बुधमावाहयामि स्थापयामि पूजयामि, -पाद्यादिभिः सम्पूज्य

प्रार्थयेत् -प्रियङ्गु कलिका श्यामं रूपेणाप्रतिमं बुधम्।
सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम्।

**विनियोग -**

बृहस्पतिइतिमंत्रस्य गृत्समद ऋषिः स्त्रिष्टुप्छन्दः ब्रह्मा देवता, बृहस्पत्यावाहने पूजने विनियोगः। ग्रां ग्रीं ग्रौं सः गुरुवे नमः।

**गुरु पूजनम् -**

ॐ बृहस्पते अतियदर्य्यो अर्हाद् द्युमद्विभाति क्रतुमज्नेषु।
यद्दीयच्छवस ऋत प्रजात् तदस्मासु द्रविणं धेहि चित्रम्।
ॐ भूभुर्वः स्वः आंगिरस गोत्र पीतवर्ण भो बृहस्पतिः इहागच्छ इहतिष्ठ सुप्रतिष्ठ वरदोभव मम पूजां गृहाण श्री बृहस्पतये नमः।
संपूज्य प्रार्थयेत- देवानां च ऋषिणां च गुरुं कांचन सन्निभम्।
बुद्धिभूतं त्रिलोकेश तं नमामि बृहस्पतिम्।।

**विनियोग -**

अन्नात्परिश्रुत इति मंत्रस्य प्रजापतिऋषिः अश्विसरस्वतीन्द्रा देवताः जगतीछन्दः शुक्रावाहने पूजनेविनियोगः। ॐ द्रां द्रीं द्रौं सः शुक्राय नमः।

**शुक्र पूजनम् -**

ॐ अन्नात्परिस्त्रुतो रसं ब्रह्मणा व्यपिवत क्षंत्र पयः सोमं प्रजापतिः।
ऋतेन सत्यमिन्द्रियं विपान ॐ शुक्रमन्धस इन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु।।
ॐ भूभुर्वः स्वः भार्गवसगोत्र शुक्ल वर्ण भो शुक्र इहागच्छ इहतिष्ठ सुप्रतिष्ठ वरदो भव मम पूजां गृहाण श्री शुक्राय नमः।
शुक्रमावाहयामि स्थापयामि पूजयामि पाद्यादिभिः सम्पूज्य, प्रार्थयेत् -हेमकुन्द मृणालाभं दैत्यानां परम् गुरुम्।
सर्वशास्त्र प्रवक्तारं तं शुक्रं प्रणमाम्यहम्।

**विनियोग -**

शन्नो देविरितिमंत्रस्य दध्यंङाथर्वण ऋषिः गायत्रीछन्दः आपो देवता शन्यावाहने पूजने विनियोगः। ॐ प्रां प्रीं प्रौं सः शनये नमः।

**शनैश्चर पूजनम् -**

ॐ शन्नोदेवीरभिष्टय आपो भवन्तु पीतये शंय्योरभिस्त्रवन्तु नः। ॐ भूभुर्वः स्वः काश्यप गोत्र कृष्णवर्ण भो शनैश्चर इहागच्छ इहतिष्ठ सुप्रतिष्ठ वरदोभव मम पूजां गृहाण श्री शनैश्चराय नमः। शनैश्चर मावाहयामि स्थापयामि पूजयामि- पाद्यादिभिः।

**सम्पूज्य प्रार्थयेत -**

नीलाम्बुज समाभासं रविपुत्रं यमाग्रजं।
छाया मार्तण्ड सम्भूतं तं नमामि शनैश्चरम्।

**विनियोग-**

कयानाश्चित्र इतिमंत्रस्य वामदेव ऋषिः गायत्रीछन्दः अग्निर्देवता राहु आवाहने पूजने विनियोगः। ॐ भ्रां भ्रीं भ्रौसः राहवे नमः।

**राहु पूजनम्-**

ॐ कयानश्चित्र आभुवदूती सदावृधः सखा। कयाश्चिच्ष्ठयावृता। ॐ भूभुर्वः स्वः पैठीनस गोत्र कृष्णवर्ण भो राहो इहागच्छ इहतिष्ठ सुप्रतिष्ठ वरदो भव मम पूजां गृहाण श्री राहवे नमः। राहुं आवाह्यामि स्थापयामि पूजयामि, पाद्यादिभिः

**सम्पूज्य, प्रार्थयेत्-**

अर्द्धकाय महावीर्य चन्द्रादित्य विमर्दनः।
सिंहिकागर्भ संभूतं तं राहु प्रणमाम्यहम्।

**विनियोग -**

केतुं कृण्वन्नितिमंत्रस्य मधुच्छन्दा ऋषिः गायत्रीछन्दः अन्तरिक्ष देवता केत्वावाहने पूजने विनियोग : ॐ स्त्रां स्त्रीं स्त्रौं सः केतवे नमः।

**केतु पूजनम्-**

ॐ केतुं कृण्वन्न केतवे पेशोमर्या अपेशसे समुषद्भिरजायथाः। ॐ भूभुर्वः स्वः जैमिनिगौत्र धूम्रवर्ण भो केतो इहागच्छ इहतिष्ठ सुप्रतिष्ठ वरदोभव मम पूजां गृहाण श्री केतवे नमः। केतुमावाहयामि स्थापयामि पूजयामि पाद्यादिभिः

**सम्पूज्य प्रार्थयेत् -**

पलाशपुष्प संकाशं तारका ग्रहमस्तकम्।
रौद्रः रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम्।

**नवग्रह प्रार्थना-**

१. पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिसप्त तुरंगवाहनः।
दिवाकरो लोक गुरुः किरीट मयि प्रसादं विदधातु देवः॥

२. श्वेताम्बरः श्वेतविभूषणश्च श्वेतद्युति दण्डधरो द्विवाहुः।
चन्द्रोऽमृतात्मा वरदः किरीट श्रेयांसि मह्यं विदधातु देवः॥

३. रक्ताम्बरो रक्त वपुः किरीट चतुर्भुजो मेषगमो गदाभृत्।
धरासुतः शक्तिधरश्च शुली सदा मम स्याद् वरदः प्रशान्तः॥

४. पीताम्बरः पीतवपुः किरीट चतुर्भुजो दण्डधश्च हारी।
चर्मासिधृत्सोम सुतः सदा मे सिंहाधिरूढो वरदो बुधोऽस्तु॥

५. पीताम्बरः पीतवपुः किरीट चतुर्भुजो दैवगुरू प्रशान्तः।
दधाति दण्डं च कमण्डलुञ्च तथाऽक्षसूत्रं वरदोऽस्तु मह्यम्।

६. श्वेताम्बर : श्वेत वपु किरीट चतुर्भुजो दैत्यगुरु प्रशान्तः।
तथाऽक्षसूत्रं च कमण्डलुञ्च दण्डंच विभ्रद्वरदोऽस्तु मह्यम्॥

७. नीलद्युति शूलधरः किरीट गृध्र स्थितस्त्रासकरो धनुष्मान्
चतुर्भुजः सूर्यसुतः प्रशान्तः सदाऽस्तु मह्यम वरदो मन्दगामी॥

८. नीलाम्बरो नील वपुः किरीट करालवक्त्रः करवालशूली।
चतुर्भुजश्चर्मधश्च्राहूः सिंहाधिरुढ़ो वरदोऽस्तु मह्यम्॥

९. धूमो द्विवाहुर्वरदो गदाभृत गृध्रासनस्थो विकृताननश्च।
किरीट केयूर विभूषिताङ्गः सदाऽस्तु मे केतुगणः प्रशान्तः॥

या निम्न प्रार्थना भी कर सकते हैं।

सूर्यः शौर्य मथेन्दुरुच्चपदवीं सन्मगलं मङ्गलः। सद्बुद्धिञ्च बुधौ गुरुश्च गुरुतां शुक्रः सुखं शंशनि॥ राहुर्वाहु बलं करोतु सततं केतुः कुलोस्योन्नतिम्। नित्यं प्रीतिकरा भवन्तु मम ते सर्वेऽनुकूला ग्रहाः॥ आयुश्च विद्या च तथा सुखंच धर्मार्थलाभौवहुपुत्रतांच शत्रुक्षयं राजसु पूज्यताच तुष्टा ग्रहाः क्षेम करा भवंतु॥

**ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशि भूमिसुतो बुधश्चश्च गुरुश्च शुक्र शनि राहु केतव सर्वेग्रहाः शान्तिकराभवन्तु॥**
**अनेन पूजनेन नव ग्रह देवता प्रियन्ताम् नमम:।**

## ॥ अथ अधिदेवता आवाहनम् ॥

**आवाहन स्थान** -

वैसे तो अधिदेवता क्रमशः सूर्यादि नव ग्रहों के दक्ष पार्श्व व प्रत्यधि देवता क्रमशः ग्रहों के वाम भाग में स्थापित करते हैं परन्तु कहीं-कहीं मतभेद है सो दोनों ही विधान दे रहे हैं।

शिव -१ (सूर्य के दक्ष पार्श्व में)

**ॐ त्र्यंबकम् यजामहे सुगन्धिम् पुष्टि वर्धनम्।**
**उर्वारुक मिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥**
**ॐ भूर्भुवः स्वः शंभो इहागच्छ इह तिष्ठ**

उमा- (चन्द्रमा के दक्ष या अग्निकोणे दिशि)

**ॐ श्रीश्चते लक्ष्मीश्च पत्न्या वहोरात्रे पार्श्वे नक्षत्राणि रूप मश्विन्नौ व्यात्तम्। इष्णन्निषाणा मुम्मइषाण सर्वलोकम्मइषाण॥**
**ॐ भूर्भुवः स्वः उमे इहागच्छ इह तिष्ठा।**

स्कंद-३ (भौम के दक्षिण भाग में या याम्य भाग में)

**ॐ यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुतवापुरीषात्। श्येनस्यपक्षा हरिणस्यबाहू उपस्तुत्यं महिजाततंतेअर्वन्॥**
**ॐ भूर्भुवः स्वः स्कंद इहागच्छ इह तिष्ठ।**

विष्णु-४ (बुध के दक्षिण भाग या पूर्व में)

**ॐ विष्णो रराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णो धुवोऽसिवैष्णवमसि विष्ण वेत्वा॥ भूर्भुभुवः स्वः विष्णु इहाच्छइहतिष्ठ।**

ब्रह्मा-५ (गुरु के दक्षिण पार्श्व में)

**ॐ आ ब्रह्मन् ब्रह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योति व्याधी महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्ति। पुरन्धिर्योषा जिष्णू रथेष्ठाः। सभेयो युवास्य यजमानस्य**

**वीरो जायतान्निकामे निकामेनः पर्जन्योवर्षतु फलवल्यो न औषधयः पच्यन्तां योग क्षेमो नः कल्पताम्।**

**ॐ भूर्भुवः स्वः ब्रह्मन् इहागच्छ इह तिष्ठ।**

इन्द्र-६ (शुक्र के दक्ष पार्श्व या पूर्व में)

**ॐ सजोषा इन्द्र सगणो मरुद्भिः सोमंपिबवृत्रहा शूर विद्वान।**
**जहि शत्रूँ2ऽरपमृधोनुदस्वाथाभयं कृणुहि विश्वतोनः॥**

**ॐ भूर्भुवः स्वः इन्द्र इहागच्छ इह तिष्ठ।**

यम-७ (शनि के दक्ष पार्श्व या पश्चिम में)

**ॐ यमायत्वा मखायत्वा सूर्यस्य त्वा तपसे देवस्त्वा सविता मध्वानक्तु पृथिव्याः सॐ स्पृशस्पाहि अर्चिरसि शोचिरसि तपोसि॥**

**ॐ भूर्भुवः स्वः यमः इहागच्छ इह तिष्ठ।**

काल-८ (राहु के दक्ष पार्श्व में)

**ॐ कार्षिरसि समुद्रस्य त्वा क्षित्याऽ उन्नयामि समापो ऽअद्भिरग्मतसमोषधीभिरोषधीः ॥**

**ॐ भूर्भुवः स्वः काल इकहागच्छ इह तिष्ठ।**

चित्रगुप्त- ९ (केतु के दक्ष पार्श्व में या नैर्ऋत्य भाग में)

**ॐ चित्रावसो स्वस्तिते पारमशीय।**

**ॐ भूर्भूवः स्वः चित्रगुप्त इहागच्छ इह तिष्ठ।**

## ॥ अथ प्रत्यधि देवतानामाआवाहनम् ॥

अग्नि -१ (सूर्य के वाम पार्श्व में या शिव के आगे)

**ॐ सनः पितेव सूनवेऽग्ने सूपायनोभव। सचस्वानः स्वस्तये॥**

**ॐ भुर्भूवः स्वः अग्नि इहागच्छ इह तिष्ठ।**

आप-२ (चन्द्रमा के वाम पर्श्व या उमा नैऋत्य में)

**ॐ अपोअद्यान्वचारिष ठं रसेन समसृक्ष्महि।**
**पयस्वानग्नऽआगमंतम्मास ठं सृजवर्चसा प्रजया च धनेन च॥**

**ॐ भूर्भुवः स्वः आप इहागच्छ इह तिष्ठ।**

धरा-३ (मंगल के वामपार्श्वे या स्कंद के वायुकोण में)

**ॐ चिदसि तया देवतयांगिरस्वद् ध्रुवासीद।**

परिचिदसि तथा देवतयांगिरस्वद् ध्रुवासीद।
ॐ भूर्भुवः स्वः धरे इहागच्छ इह तिष्ठ।

विष्णु-४ (बुध के वाम पार्श्वे नारायण के उत्तर में)

ॐ इदं विष्णुर्विचक्रमे त्रेधानिदधेपदम्।
समूढमस्यपाꣳ सूरे स्वाहा।।
ॐ भूर्भुवः स्वः विष्णो इहागच्छ इहतिष्ठ।

इन्द्र-५ गुरु के वामपार्श्वे या ब्रह्मा के उत्तर में-

ॐ इन्द्र आसांनेता बृहस्पति दक्षिणा यज्ञः पुरऽएतु सोमः।
देवसेना नामभिभंजतीनां जयंतीनां मरुतोयं त्वग्रम्।
ॐ भूर्भुवः स्वः इन्द्रइहा गच्छ इह तिष्ठ।

इन्द्राणी-६ (शुक्र के वामवार्श्वे या इन्द्र के पश्चिमे में)

ॐ इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो ऽभवन्यथेन्द्रं
दैवी र्विशो मरुतोऽनुवर्त्मानोऽभवन्। एवमिमं
यजमानन्दैवीश्च। विशोमानुषीश्चानु वर्त्मानो भवंतु।
ॐ भूर्भुवः स्वः इन्द्राणि इहागच्छ इहतिष्ठ।

प्रजापति-७ (शनि के वामापर्श्वे या यम के पश्चिम में)

ॐ प्रजापतेनत्व देतान्यन्यो विश्वारूपाणि परिताबभूव।
यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पितासावस्य पिताव्यय ꣳ
स्याम पतयोरयीणा ꣳ स्वाहा। रुद्रयते क्रिविपरन्नाम तस्मिन्
हुतमस्येष्टमसि स्वाहा।।
ॐ भूर्भुवः स्वः प्रजापते इहागच्छ इह तिष्ठ।

पन्नग-८ (राहु के वामपार्श्वे या काल के पश्चिम में)

ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु।
ये अन्तरिक्षे ये दिवितेभ्यः सर्पेभ्यो नमः।।
ॐ भूर्भुवः स्वः पन्नगा इहागाच्छ इह तिष्ठ।

ब्रह्मा-९ (केतु के वामपार्श्वे में या चित्रगुप्त के ईशान में)

ब्रह्मज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचोव्वेन ऽआवः सबुध्न्या
ऽउपमाऽस्य विष्ठाः सतश्च योनिमसतश्च विवः।।
ॐ भूर्भुवः स्वः ब्रह्मा इहागच्छ इह तिष्ठ।

## पंच लोकपाल स्थापनम्

गणपति-१ (राहु के उत्तर में या सूर्य के वायव्य कोण में)

**ॐ गणानां त्वा गणपति ठं ऽहवामहे प्रियाणान्त्वा प्रियपति ठं हवामहे। निधीनांत्वा निधिपति ठं हवामहे वसोमम आहमजानि गर्भधमा त्वमजासि गर्भधम्॥**

**ॐ भूर्भुव स्वः गणपते इहागच्छ इह तिष्ठ।**

दुर्गा-२ (शनि के उत्तर में या गुरु के उत्तर में)

**ॐ जातवेदसे सुनवाम सोम मरातीयतो निदहाति वेदः। सनः परिषदति दुर्गाणि विश्वानावेव सिन्धुं दुरित्याग्निः।**

**ॐ भूर्भुवः स्वः दुर्गे इहागच्छ इह तिष्ठ।**

वायु-३ (रवि के उत्तर में)

**ॐ वायो ये ते सहस्त्रिणो रथा सस्ते भिरागहि नियुत्वान्त्योमपीतये।**

**ॐ भूर्भुवः स्वः वायो इहागच्छ इह तिष्ठ।**

अंतरिक्ष-४ (राहु के दक्षिण में या शनि के पश्चिम में)

**ॐ घृतं घृतपावानः पिबत वसां वसापावानः पिबतातरिक्षस्य हविरसि स्वाहा। दिशः प्रदिश ऽआदिशो विदिश ऽउद्दिशो दिग्भ्यः स्वाहा।**

**ॐ भूर्भुवः स्वः अंतरिक्ष इहागच्छ इहतिष्ठ।**

अश्विन्य -५ (केतू के दक्षिण में या सूर्य के पूर्व में)

**ॐ यावां कशा मधुमत्यश्विना सूनृतावती तथा यज्ञं मिमक्षतम्।**

**ॐ भूर्भवः स्वः अश्विनादूहागच्छतम् इहागच्छ इह तिष्ठ।**

## ॥ मण्डप प्रवेश ॥

यजमान आचार्य तथा ऋत्विजों के साथ मण्डप परिक्रमा करें पश्चिम द्वार से पञ्चाग देवताओं के साथ द्वार पर यज्ञ मण्डप भूमी की पूजा कर शंखघोष के साथ मण्डप प्रवेश करें। प्रवेश करते हुये यजमान से आचार्य द्वारपालों को प्रणाम करावे।

## ॥ रक्षा विधानम् ॥

यजमान के बांये हाथ में आचार्य पीली सरसों देवे यजमान उसे दायें हाथ से ढक देवे आचार्य निम्न श्लोको का उच्चारण करें -

ॐ गणाधिपं नमस्कृत्य-नमस्कृत्य पितामहम्।
विष्णुं रुद्रं श्रियं देवीं वन्दे भक्त्या सरस्वतीम्॥१॥
स्थानाधिपं नमस्कृत्य ग्रहनाथं निशाकरम्।
धरणी गर्भ सम्भूतं शशिपुत्रं बृहस्पतिम्॥२॥
दैत्याचार्यं नमस्कृत्य सूर्यपुत्रं महाग्रहम्।
राहुं केतुं नमस्कृत्य यज्ञारम्भे विशेषतः॥३॥
शंखो रक्षेच्च यज्ञाग्रे पृष्ठे खड्गस्तथैवच।
गर्ग मुनिं नमस्कृत्य नारदं मुनि सत्तमम्॥४॥
वशिष्ठं मुनिशार्दूलं विश्वामित्रं च गोभिलम्।
व्यासं मुनि नमस्कृत्य सर्वशास्त्र विशारदम्॥५॥
विद्याधिकाः ये मुनयः आचार्यांश्च तपोधनान्।
तान् सर्वान् प्रणम्माम्येवं यज्ञरक्षाकरान् सदा॥६॥

जो पीली सरसों यजमान के बायें हाथ में आचार्य नें रखवायी थी उन्हें यजमान दायें हाथ से पूर्वादि दिशाओं में प्रक्षेपण करें आचार्य निम्न श्लोकों का उच्चारण करें-

पूर्वे रक्षतु गोविन्द आग्नेयां गरुडध्वजः।
याम्यां रक्षतु वाराहो नार सिंहस्तु नैर्ऋते॥१॥
वारुण्यां केशवो रक्षेद्वायव्यां मधुसूदनः।
उत्तरे श्रीधरो रक्षेदैशान्यां तु गदाधरः॥२॥
ऊर्ध्वं गोवर्धनो रक्षेदधस्ताच्च त्रिविक्रमः।
एवं दश दिशो रक्षेद्वासुदेवो जनार्दनः॥३॥
शंखो रक्षेच्च यज्ञाग्रे पृष्ठे खड्गस्तथैवच।
वामपारश्वे गदा रक्षे द्दक्षिणे तु सुदर्शनः॥४॥
उपेन्द्र पातु ब्रह्माणमाचार्य पातु वामन।
अच्युतः पातु ऋग्वेदं यजुर्वेदमधोक्षतः॥५॥

कृष्णो रक्षतु सामानि ह्यथर्वं माधवस्तथा।
उपविष्टाश्चये विप्रास्तेऽनिरुद्धेन रक्षिताः॥६॥
यजमानं सपत्नीकं कमलाक्षश्च रक्षतु।
रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षाताद्धरि॥७॥
यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा।
स्थानं त्यक्त्वा तु सर्वत्रं यत्रस्थंतत्र गच्छतु॥८॥
अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः।
ये भूता विघ्न कर्तारस्ते नश्यन्तु शिवाज्ञया॥९॥
अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम्।
सर्वेषामविरोधेन यज्ञकर्म समारभे॥१०॥
भूतप्रेत पिशाचाद्यास्त्वपक्रामन्तु राक्षसाः।
स्थानादस्मादव्रजन्त्वन्यत् स्वीकरोमि धरामिमाम्॥११॥

रक्षा विधान के बेद मंत्रो का भी आचार्य उच्चारण करें -

ॐ रक्षोहणं व्वलगहनं वैष्णवी मिदमहंतंवलगमुत्कि रामियम्मेनिष्ट्योयमात्यो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मेसमानोयम समानो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मेसबन्धुर्य्यम सबन्धुर्निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत् कृत्याङ्किरामि॥१॥
रक्षोहणो वो व्वलगहनः प्रोक्षामि व्वैष्णवान् रक्षोहणोवोव्वलगहनो ऽवनयामि वैष्णवान् रक्षोहणो व्वोव्वलगहनो ऽवस्तृणामि वैष्णवान् रक्षोहणोवां व्वलगहना ऽउपदधामिव्वैष्णवीरक्षोहणो वां व्वलगहनौ पर्य्यूहामि व्वैष्णवी वैष्णवमसि वैष्णवास्थ॥२॥
रक्षसां भागो ऽसि निरस्तथ्ं रक्षइदमह थ्ं रक्षोऽभितिष्ठामि इदमहथ्ं रक्षोऽ वबाध ऽ इदमह थ्ं रक्षोऽधमन्तमोनयामि॥
घृतेनद्यावापृथिवीप्प्रोर्णुवाथां व्यायो व्वे स्तोका नामग्निराज्यस्य त्वेतु स्वाहा स्वाहा कृतेऽ ऊद्ध्र्वनभसं मारुतं गच्छतम्॥३॥
रक्षोहा विश्श्चचर्षीणिरभियोनि मयोहते। द्रोणेसधस्त्थ मासदत्॥

॥ इति रक्षा विधान ॥

## ॥ वास्तु पूजनम् ॥

यजमान अपनी पत्नि के साथ मण्डप के नैर्ऋत्य कोण में हस्तमात्र वेदी के पास आसन के ऊपर प्राङ्गमुख बैठकर आचमन प्राणायाम करे आचार्य यजमान से निम्न संकल्प करावें - **देशकालौ सङ्कीर्त्य- अस्मिन् कर्मणि कुण्डमण्डपादिषु हीनाधि काङ्गतादि वास्तुदोषसूचित सर्वारिष्ट निवर्हणार्थं अमुक देवता प्रतिष्ठायाः साङ्गता सिद्ध्यर्थं चतुषष्ठिपदे नैर्ऋत्य कोणे शिखिन्यादि वास्तुमण्डल देवता पूजनं करिष्ये।** वास्तु मूर्ति की प्राण प्रतिष्ठा हेतु पुनः संकल्प- **देशकालौ संकीर्त्य अमुक गोत्रोत्पन्नो अमुकशर्माहं (सपत्निकोहं) अस्यां वास्तुमूर्तौ अवघातादि दोष परिहारार्थे अग्न्युतारणं देवतासानिध्यार्थं च प्राणप्रतिष्ठां करिष्ये।** स्वर्ण या रजतमयी वास्तुमूर्ति को पात्र में रख घृत लगालेवें फिर पंचामृत की धारा लगाकर निम्न मंत्र बोलें -

**ॐ समुद्रस्यत्वा वकयाग्ने परिव्ययामसि। पावको ऽअस्मभ्य ꣳ शिवोभव॥१॥ ॐ हिमस्य त्वा जरायुणाग्ने परिव्ययामसि। पावकोऽअस्मभ्य ꣳ शिवोभव॥२॥ ॐ अपामिदं न्ययन ꣳ समुद्रस्य निवेशनम्। अन्याँस्ते ऽ अस्मत्तपन्तुहेतयः पावकोऽअस्मभ्य ꣳ शिवोभव॥३॥ ॐ नमस्ते हरसे शोचिसे नमस्तेऽ अस्त्वर्चिर्षे अन्यास्तेऽ अस्मत्तपन्तु हेतय पावको अस्मभ्य ꣳ शिवोभव॥४॥ ॐ प्राणदा आपानदा व्यानदावर्च्चोदाव्वरिवोदाः। अन्यांस्ते ऽअस्मत्तपन्तु हेतेयः पावको ऽअस्मभ्य ꣳ शिवोभव॥५॥**

दूध पंचामृत धारा देकर वास्तुमूर्ति को वाम हाथ में रख दाहिनें हाथ से ढक देवें निम्न प्राण प्रतिष्ठा के मंत्र आचार्य कहे-

**ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं क्षं हं सः सोऽहं अस्य वास्तु मूर्तेः प्राणा इह तिष्ठन्तु॥१॥**

**ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं क्षं हंसः सोऽहं अस्यवास्तु मूर्ते जीव इह स्थितः॥२॥**

**ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं क्षं हंसः सोऽहं अस्य वास्तु मूर्तेः वाङ्मनस्त्वक चक्षुः श्रोत्रजिह्वाघ्राणपाणि पादपायुपस्थानि इहागत्यं सुखं चिरं तिष्ठन्तु स्वाहा॥३॥ अस्यै प्राणा प्रतिष्ठन्तु अस्यै प्राणा क्षरन्तु च अस्यै देवत्वमर्चायै मामहेतीति कश्चन॥४॥ वास्तुपुरुष प्रतिष्ठितोवरदोभव।** प्राण प्रतिष्ठित की हुई मूर्ति को वास्तु वेदी के ऊपर रख देवें वास्तु वेदी के आग्नेय कोण से प्रदक्षिणा पूर्वक चार शंकुओ को द्विगुणकृत सूत्र से वेष्टिकत कर किनारों पर रोप लेवे पुनः आग्नेय कोण से शंकु के पास **उडदभात ( दध्योदन )** बलिदेवें -

आग्नेय कोण में- **ॐ अग्निभ्यो ऽप्यथ सर्पेभ्यो ये चान्ये तान् समाश्रिताः। बलिं तेभ्यः प्रयच्छामि पुण्यमोदन मुत्तमम्॥१॥**

नेर्ऋत्य कोण में -

**ॐ नैर्ऋत्याधिपति श्चैव नैर्ऋत्यां ये च राक्षसाः**
**बलिं तेभ्य प्रयच्छामि पुण्यमोदनमुत्तमम्॥२॥**

वायव्य कोण में-

**ॐ नमो वै वायु रक्षेभ्यो ये चान्ये तान् समाश्रिताः।**
**बलिं तेभ्य प्रयच्छामि पुण्यमोदनमुत्तमम्॥३॥**

ईशान कोण में-

**ॐ रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्ये तान् समाश्रिताः।**
**बलिं तेभ्य प्रयच्छामि पुण्यमोदनमुत्तमम्॥४॥**

बलि देकर शंकुओं का गन्धाक्षतादि से पूजन कर वास्तु बेदि के ऊपर रेखाओं का पूजन कर लेवें -

पश्चिम से पूर्व -

**ॐ लक्ष्म्यै नमः ॥१॥ ॐयशोवत्यै नमः॥२॥**
**ॐ कान्तायै नमः॥ ३॥ ॐ प्रियायै नमः॥४॥**
**ॐ विमलायै नमः॥५॥ ॐ शिवायै नमः॥६।**
**ॐ सुभगायै नमः॥६॥ ॐ सुमत्यै नमः॥५॥**
**ॐ इडायै नमः॥ ९॥**

दक्षिण से उत्तर -

**ॐ धान्यायै नमः ।।१।। ॐ प्राणायै नमः।।२।।**
**ॐ विशालायै नमः।।३।। ॐ स्थिरायै नमः।।४।।**
**ॐ भद्रायै नमः ।।५।। ॐ जयायै नमः।।६।।**
**ॐ निशायै नमः।।७।। ॐ विरजायै नमः ।।८।।**
**ॐ विभवायै नमः।।**

रेखाओं में रेखा देवताओं का पूजन गन्ध अक्षत आदि से कर देवें-

**६४ वास्तुओं का आवाहन् एक मंत्र से-**

**ॐ वास्तोष्पते प्रतिजानी ह्यस्मान्स्वावेशोऽअनमी वो भवानः। यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे।। वास्तु पुरुषाय नमः।। वास्तु पुरुषं आवाहयामि।। स्थापयामि पूजयामि।।**

## ।। ६४ वास्तुओं का आवाहन ।।

यजमान हाथ में अक्षत लेकर आवाहन करें -

**ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहेवयम्। पूषा नो यथा व्वेदसामसद्बृधेरक्षिता पायुरब्धः स्वस्तये।। शिखिने नमः।। शिखिनमावाहयामि स्थापयामि।।१।।**

**ॐ शंनोवातः पवता ॐ शंनस्तपतु सूर्य्यः। शंनः कनिक्रन्ददेवः पर्ज्जन्योऽअभिवर्षतु।। प्रजन्याय नमः।। पर्जन्यमावाहयामि स्थापयामि।।२।।**

**ॐ मर्म्माणिते व्वर्मणाच्छादयामि सोमस्त्वाराजामृते नानुवस्ताम्।। उरोर्व्वरी यो व्वरुणस्ते कृणोतु जयन्तन्त्वानु देवा मदन्तु।। जयन्ताय नमः।। जयन्तमावाहयामि स्थापयामि।।३।।**

**ॐ आयात्विन्द्रो वस ऽउपन इह स्तुतः सधमादस्तु शूरः।। व्वबृधानस्तविषीर्य्यस्य पूर्विद्यौ क्षत्रमभि भूति पुष्यात्।। कुलिशायुधाय नमः।। कुलिशायुधमावाहयामि स्थापयामि।।४।।**

**ॐ बण्णमहाँ ऽअसि सूर्य्य बडादित्य महाँ असि।। महस्ते सतो महिमा पनस्यऽतेद्धादेव महाँ ५ असि।। सूर्याय नमः।। सूर्यमावाहयामि स्थापयामि।।५।।**

ॐ व्व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्॥ दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥ सत्याय नमः॥ सत्यमावाहयामि स्थापयामि॥६॥

ॐ आत्वाहार्षमन्तरभूद्ध्रुवस्तिष्ठा विचाचलिः॥ विशस्त्वा सर्व्वा व्वाच्छन्तु मां त्वदद्राष्ट्रमधिभ्रशत्॥ भृशाय नमः॥ भृषमावाहयामि स्थापयामि॥७॥

ॐ यावङ्क्कशा मधुमत्यश्विना सूनृतावती॥ तया यज्ञं मिमिक्षतम्॥ आकाशाय नमः॥ आकाशमावाहयामि। स्थापयामि॥८॥

ॐ व्वायोये ते सहस्त्रिणोरथासस्ते भिरागहि॥ नियुत्वान्सोम पीतये॥ वायवे नमः॥ वायु मावाहयामि॥ स्थापयामि॥९॥

ॐ पूषन्तव्रते व्वयंनरिष्येम कदाचन॥ स्तोतारस्त ऽइह स्मसि॥ पूष्णे नमः॥ पूषणमावाहयामि॥ स्थापयामि॥१०॥

ॐ तत्सूर्य्यस्य देवतत्वन्त न्नमहित्वं मद्ध्या कर्तोर्वितत ॐ सञ्जभार॥ यदेदयुक्त हरितः सधस्था दाद्रात्रीर्वा सस्तनुते सिमस्मै॥ वितथाय नमः॥ वितथमावाहयामि॥ स्थापयामि॥११॥

ॐ अक्षन्नमीमदन्त ह्यवप्रिया ऽअधूषत॥ अस्तोषत स्वभानवो व्विप्रा न विष्ठया मती यो जान्विन्द्रते हरी॥ गृहक्षताय नमः॥ गृहक्षतमावाहयामि॥ स्थापयामि॥१२॥

ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्म्माय स्वाहा घर्म्मः पित्र॥ यमाय नमः॥ यममावाहयामि। स्थापयामि॥१३॥

ॐ गन्धवर्वस्त्वाव्विश्वावसुः परिदधातु व्विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ऽइडितः॥ इन्द्रस्य बाहुरसिदक्षिणो व्विश्वयारिष्ट्यैयजमानस्य परिधिरस्य ग्निरिड ईडितः॥ मित्रा वरुणौ त्त्वोत्तरतः परिधत्तान्ध्रुवेण धर्म्मणा विश्वस्यारिष्ट्यै यजमानस्यग्निरिड इडितः॥ गन्धर्वाय नमः॥ गन्धर्वमावाहयामि॥ स्थापयामि॥ १४॥

ॐ सौरी बलाका शार्गः सृजयः शयाण्डकस्ते मैत्राः सरस्वत्यै शारिः पुरुषवावश्वाविद्धौमीशार्दूलोव्वृकः पृदाकुस्ते मन्यवे सरस्वत्यै

शुकः पुरुषवाक्॥ भृङ्गराज मावाहयामि॥ स्थापयामि॥१५॥

ॐ मृगो न भीमः कुचरोगिरिष्ठाः परावत ऽआजगन्ध्या परस्याः॥ सृक ꣳ स ꣳ शाय पविमिन्द्रतिग्मं विशत्त्रून्ता ढिव्विमृधोनुदस्व॥ मृगाय नमः॥ मृगमावाहयामि॥ स्थापयामि॥१६॥

ॐ उशन्तस्त्वानिधीमह्युशन्तः समिधीमहि॥ उशन्नुशत ऽआवह पितृन्हविषे ऽ अत्तवे॥ पितृगणेभ्यो नमः॥ पितृगणान् आवाहयामि॥ स्थापयामि॥१७॥

ॐ द्वेव्विरूपे चरतः स्वर्त्थे ऽअन्त्यान्या व्वत्समुपधापयेते॥ हरिरन्यस्यां भवति स्वधावाञ्छुक्रो ऽ अन्यस्यां ददृशे सुवर्चाः दौवारिकाय नमः॥ दौवारिकमावाहयामि॥ स्थापयामि॥१८॥

ॐ नीलग्ग्रीवाः शितिकण्ठा दिव ꣳ रुद्रा ऽउपश्श्रिताः॥ तेषा ꣳ सहस्त्रयोजनेव धन्वानि तन्मसि॥ सुग्रीवाय नमः॥ सुग्रीवमावाहयामि॥ स्थापयामि॥१९॥

ॐ नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेब्भ्यो व्व्रातपतिब्भ्य श्र्वो नमो नमो गृत्सेब्भ्यो गृत्सपतिब्भ्यश्च वो नमो नमो व्विरुपेब्भ्यो व्विश्वरूपेब्भ्यश्च वो नमो नमः॥ पुष्पदन्ताय नमः॥ पुष्पदन्त मावाहयामि॥ स्थापयामि॥२०॥

ॐ इम्ममे व्वरुण श्रुधी हवमद्या च मृडय॥ त्वामवस्युराचके॥ वरुणाय नमः॥ वरुण मावाहयामि॥ स्थापयामि॥२१॥

ॐ यमश्विना नमुचेरासुरादधि सरस्वत्यसुनो दिन्द्रियाय॥ इमन्त ꣳ शुक्क्रम्मधुमन्त मिन्दु ꣳ सोम ꣳ राजानमिह भक्षयामि। असुराय नमः॥ असुरमावाहयामि॥ स्थापयामि॥२२॥

ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये॥ शंय्योरभिस्त्रवन्तु नः॥ शेषाय नमः॥ शेषमावाहयामि॥ स्थापयामि॥२३॥

ॐ एतत्ते रुद्रा ऽवसन्तेन परो मूजवतो ऽतीहि अवततधन्वा पिनाकावसः कृत्तिवासा ऽअहि ꣳ सन्नः शिवोऽतीहि॥ पापाय नमः॥ पापमावाहयामि। स्थापयामि॥२४॥

ॐ द्रापे ऽ अन्धसस्पते दरिद्र नील लोहितआसां प्रजानां

मेषां पशूनाम्मा भेर्म्मा रोड्मोच नः किञ्चनाममत्॥ रोगाय नमः॥ रोगमावाहयामि॥ स्थापयामि॥२५॥

ॐ अहिरिव भोगेः पर्य्येति बाहु ञ्ज्यायाहेतिं परिबाधमानः॥ हस्तग्घ्नो व्विश्वा व्वयुनानि विद्वान् पुमान् पुमा ँ सम्परि पातु व्विश्वतः॥ अहये नमः॥ अहिमावाहयामि॥ स्थापयामि॥२६॥

ॐ अवतत्य धनुष्टव ँ सहस्त्राक्ष शतेषुधे॥ निशीर्य्य शल्याना म्मुखा शिवो नः सुमना भवः॥ मुख्याय नमः॥ मुख्यमावाहयामि॥ स्थापयामि॥२७॥

ॐ इमा रुद्राय त वसे कपर्द्दिने क्षयद्वीराय प्रभरामहे मतीः यथा शमसद्द्विपदे चतुष्पदे व्विश्वं पुष्टङ्ग्रामे ऽअस्मिन्नना तुरम्॥ भल्लाटाय नमः॥ भल्लाटमावाहयामि॥ स्थापयामि॥ २८॥

ॐसोम ँ राजानमव से ग्निमन्वारभामहे॥ आदित्यान् विष्णु ँ सूर्य्यं ब्रह्माणं च बृहस्पति ँ स्वाहा॥ ॐ सोमाय नमः॥ सोममावाहयामि॥ स्थापयामि॥२९॥

ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु॥ ये ऽ अन्तरिक्षे ये दिवि तेब्भ्यः सर्पेब्भ्यो नमः॥ सर्पेभ्यो नमः॥ सर्पान् मावाहयामिं स्थापयामि॥३०॥

ॐ इड ऽएह्यदित ऽएहि काम्या ऽएत॥ मयि वः कामधरणं भूयात्॥ अदित्यै नमः॥ अदितिमावाहयामि॥ स्थापयामि॥३१॥

ॐ अदितिर्द्यौरिदितिरन्तरिक्षमदितिर्माता स पिता स पुत्र :॥ व्यिश्वे देवा ऽअदितिः पञ्चजना अदितिर्ज्जातमदिति र्ज्जनित्वम्॥ दित्यै नमः॥ दितिमावाहयामि॥ स्थापयामि॥३२॥

ॐ अपस्वग्नेसधिष्ठव सौषधीरनु रुध्यसे॥ गर्ब्भे स ञ्जायसे पुनः॥ अदभ्यो नमः॥ अप आवाहयामि॥ स्थापयामि॥३३॥

ॐ हस्त ऽ आधाय सविता बिब्भ्रदब्भिं ँहिरण्ययीम्। अग्नेर्ज्ज्योतिर्निचाय पृथिव्याऽअद्ध्या भरदानुष्टुभेन च्छन्दसाङ्गि रस्वत्॥ सावित्राय नमः॥ सावित्रमावाहयामि॥ स्थापयामि॥३४॥

ॐ आषाढं युत्सु पृतनासु पप्रि ँ स्वर्षामप्सां ब्वृजनस्य

गोपाम्। भरेषुजा ꣳ सुक्षिति ꣳ सुश्रवसञ्जयन्तन्त्वामनुमदेम सोम।। जयाय नमः।। जयमावाहयामि।। स्थापयामि।।३५।।

ॐ नमस्ते रुद्रमन्यव ऽ उतोत ऽइषवे नमः।। बाहुब्भ्यामुतते नमः।। रुद्राय नमः।। रुद्रमावाहयामि।। स्थापयामि।।३६।।

ॐ यदद्य सूर ऽउदिते नगा मित्रो ऽ अर्य्य मा।। सुवाति सविता भगः।। अर्य्यम्णे नमः।। अर्यमणमावाहयामि।। स्थापयामि।।३७।।

ॐ व्विश्वानि देव सवितुर्दुरितानि परासुव।। यद्भद्रं तन्न ऽ आसुव।। सवित्रे नमः।। सवितारमावाहयामि।। स्थापयामि।।३८।।

ॐ व्विवस्वन्नादित्यैष तेसोमपीथस्तस्मिन्नमत्स्व।। श्रदस्मै नरो व्वचसे दधातन यदाशीद्रर्दा दम्पति व्याममश्नुतः।। पुमान्पुत्रो जायते व्विन्दते व्वस्वधा व्विश्वाहारप एधते गृहे।।विवश्वते नमः।। विवस्वतमावाहयामि।। स्थापयामि।।३९।।

ॐ सबोधि सूरिर्म्मघवा व्वसुपते व्वसुदावन्।। युयोध्यस्म द्द्वेषा ꣳ सि विश्वकर्मणे स्वाहा।। विबुधाधिपाय नमः।। विबुधाधि पमावाहयामि।। स्थापयामि।।४०।।

ॐ मित्रस्य चर्षणीधृतोवो देवस्य सानसि।। द्युम्नश्चित्र श्रवस्तमम्।। मित्रायनमः।। मित्रमावाहयामि।। स्थापयामि।।४१।।

ॐ नाशयित्रिबलासस्यार्श ऽउपचितामसि।। अथो शतस्य यक्ष्माणां पाकारोरसि नाशनी।। राजयक्ष्मणे नमः।। राजयक्ष्माण मावाह्यामि।। स्थापयामि।।४२।।

ॐ स्योना पृथिवी नो भवानृक्षरा निवेशनी।। यच्छा नः शर्म्म स प्रथाः।। पृथ्वीधराय नमः।। पृथ्वीधरमावाहयामि।। स्थापयामि।।४३।।

ॐ आते व्वत्सो मनो यमत्पर माच्चित्सधस्थात्।। अग्ने त्वाङ्कामयागिरा।। आपवत्साय नमः।। आपवत्समावाहयामि।। स्थापयामि।।४४।।

ॐ ब्रह्म यज्ञानम्प्रथमम्पुरस्तात् द्विसीमतः सुरुचोव्वे न

ऽआव:।। स बुध्न्याऽउपमा ऽ अस्य विष्ठाः सत श्च योनिमसतश्च व्विवः।। ब्रह्मणे नमः।। ब्रह्माणमावाहयामि।। स्थापयामि।। ४५।।

ॐ वास्तोस्पते प्रतिजानीह्यस्मान् स्वावेशो ऽ अनमीवो भवानः यस्त्वेमहेप्रतितन्नो जुषस्व शन्नो भवद्विपदे शंचतुष्पदे।। वास्तोष्पतये नमः।। वास्तोष्पतिं आवाहयामि स्थापयामि।।४६।।

ॐ यन्ते देवी निर्ऋतिरावबन्ध पाशङ्ग्री वास्वविचृत्यम्।। तन्तेव्विष्याम्यायुषोनमध्यादथैतम्पितुमद्धि प्प्रसूतः।। नमो भूत्यैये दंचकार।। चरक्यै नमः।। चरकीमावाहयामि।। स्थापयामि।।४७।।

ॐ अक्षराजाय कितवं कृतायादिनवदर्शन्त्रेताये कल्पिनन्द्वापरायाधि कल्पिनमास्कन्दाय सभास्थाणुम्मृत्यवे गोव्यच्छमन्तकाय गोघातं क्षुधे यो गावीकृन्तन्तं भिक्षमाण ऽ उपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने शैलगम्।। विदार्यै नमः।। विदारी-मावाहयामी।। स्थापयामि।।४८।।

ॐ इन्द्रस्य क्रोडोऽदित्यै पाजस्यन्दिशांजात्रवो ऽदित्यै भसज्जी मूतान् हृदयौपशेनान्तरिक्षं पुरीततानभ ऽ उदर्येण चक्रवाकौमत स्नाभ्यन्दि वंव्वृक्का भ्याङ्गिरीन्नप्लाशिभिरुपलान्प्लीन्नहनावा-ल्मीकान्क्लोम भिग्लौभिर्गुल्मान्हिराभिः स्रवन्ति हृदान्कुभिभ्या ॐ समुद्रमुदरेण व्वैश्वानरं भस्मना।। पूतनायै नमः।। पूतना-मावाहयामि।। स्थापयामि।।४९।।

ॐ यस्यास्ते घोर ऽ आसजुहोम्येषाम्बन्धा नामवसर्ज्जनाय।। यान्त्वाजनो भूमिरिति प्प्रमन्दते निर्ऋतिन्त्वाहम्परिवेद विश्वतः।। पापराक्षस्यै नमः।। पापराक्षसीमावाहयामि।। स्थापयामि।।५०।।

ॐ यदद्यसूरऽउदिते नागामित्रोऽअर्यमा। सुवाति सविता भगः।। अर्य्यम्णे नमः ''अर्यमणामावाहयामि स्थापयामि।।५१।।

ॐ यदक्रन्दः प्रथम ञ्जायमान ऽ उद्यन्तसमुद्रादत वा पुरीषात्।। श्येनस्य पक्षा हरिणस्य वाहू ऽ उपस्तुत्यम्महि जातन्ते ऽअर्वन्।। स्कन्दाय नमः।। स्कन्दमावाहयामि।। स्थापयामि।।५२।।

ॐ हिंकाराय स्वाहा हिंकृताय स्वाहा क्रन्दते स्वाहा ऽवक्रन्दाय स्वाहा। प्प्रोथते स्वाहा प्रपोथाय स्वाहा गन्धाय स्वाहा ग्घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा व्वल्गते स्वाहा सीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्प्रबुद्धाय स्वहा व्विजृम्भमाणाय स्वाहा व्विचृताय स्वाहा स ँ हानाय स्वाहो पस्थिताय स्वाहा यनाय स्वाहा प्रायणाय स्वाहा॥ जृम्बकाय नमः॥ जृम्बकमावाहयामि॥ स्थापयामि॥ ५३॥

ॐ का स्विदासीत्पूर्व्वचित्तिः कि ँ स्विदासीद् बृहद्वयः॥ कास्विदासीत्पिलिप्पिला का स्विदा सीत्पिशङ्गिला॥ पिलिपिच्छाय नमः॥ पिलिपिच्छमावाहयामि॥ स्थापयामि॥५४॥

ॐ त्रातारमिन्द्रमवितारमिन्द्र ँ हवेहवे सुहव ँ शूरमिन्द्रम्॥ ह्वयामि शक्रं पुरहूत मिन्द्र ँ स्वस्तिनो मघवा धात्विन्द्रः॥ इन्द्राय नमः॥ इन्द्रमावाहयामि॥ स्थापयामि॥५५॥

ॐ त्वन्नोऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः॥ यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वा द्वेषा ँ सिप्रिमुमुग्ध्यस्मत्॥ अग्नये नमः॥ अग्निंमावाहयामि॥ स्थापयामि॥५६॥

ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा॥ स्वाहा घर्माय स्वाहा घर्म्मः पित्रे॥ यमाय नमः॥ यममावाहयामि॥ स्थापयामि॥५७॥

ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्या मन्विहितस्करस्य॥ अन्न्यमस्मदिच्छ्र सातऽइत्या नमो देवि निर्ऋते तुभ्यमस्तु॥ निर्ऋतये नमः॥ निर्ऋतिमावाहयामि॥ स्थापयामि॥५८॥

ॐ तत्त्वायामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः॥ अहेडमानो व्वरुणे हबोध्युरुश ँ समान ऽआयुः प्रमोषीः॥ वरुणाय नमः॥ वरुणमावाहयामि॥ स्थापयामि॥५९॥

ॐआ नो नियुद्भिः शतिनीभिरध्वर ँ सहस्त्रिणीभिरूपयाहि यज्ञम्॥ व्वायोऽ अस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः॥ वायवे नमः॥ वायुमावाहयामि॥ स्थापयामि॥६०॥

ॐ व्वयं ॐ सोमव्व्रते तव मनस्तनूषु बिभ्रतः।। प्रजावन्तः सचेमहि।। सोमाय नमः।। सोममावाहयामि।। स्थापयामि।।६१।।

ॐ तमीशानं जगतस्त स्थुषस्प्पतिन्धियज्जिन्नवमवसे हूमहे व्वयम्।। पूषा नो यथा व्वेदसामसद्वृध रक्षिता पायुरदब्धः स्वस्तये।। ईशानाय नमः।। ईशानमावाहयामि।। स्थापयामि।।६२।।

ॐ अस्मे रुद्रा मेहना पर्व्वतासो वृत्रहत्ये भरहूतौ सजोषाः।। यः स ॐ सते स्तुवते धायि पज्र ऽ इन्द्रज्जेष्ठा ऽ अस्माँ।। अवन्तु देवाः।। ब्रह्मणे नमः।। ब्रह्माणमावाहयामि।। स्थापयामि।।६३।।

ॐ स्योना पृथिवि नो भवान्नृक्षरानिवेशनि।। यच्छा नः शर्म्म सप्रथाः।। अनन्ताय नमः।।। अनन्तमावाहयामि।। स्थापयामि।।६४।।

**प्रतिष्ठापन -**

ॐ एतं ते देव सवितुर्यज्ञं प्राहु बृहस्पतये ब्रह्मणे।
तेन यज्ञपतिं तेन मामव।।

वास्तुओं का आवाहन तथा गन्धाक्षत पुष्प धूप दीपक नैवेद्य आदि से पूजन कर वास्तु देवताओं को पायस बलि समर्पण कर देवें-

**बलिदान -**

ॐ नाना पक्वान्न संयुक्तं नाना गन्ध समन्वितम्।
बलिं गृहाण देवेश वास्तुदोष हरो भव।।

**प्रार्थना -**

वास्तुदेव नमस्ते ऽस्तु भूशय्याभिरत प्रभो।
मद्गृहे धन धान्यादि समृद्धिं कुरु सर्वदा।।१।।
नमस्ते वास्तु देवेश सर्वदोष हरो भव।
शान्तिं कुरु सुखं देहि सर्वान्कामान्प्रयच्छ मे।।२।।
देवेश वास्तु पुरुष सर्व विघ्न विदारण।
शान्ति कुरु सुखं देहि यज्ञे ऽस्मिन्मम सर्वदा।।३।।
मंत्र हीनं क्रियाहीनं भक्ति श्रद्धा विवर्जितम्।।
यत् पूजितं मयावास्तो परिपूर्ण तदस्तु मे।।४।।

## ।। षोडष स्तम्भ पूजनम् ।।

१. अन्तर ईशान में पहले वरुण कलश पूजन करे ब्रह्मा स्तंभ (कदली) पूजन करने का मंत्र व विनियोग-

**ब्रह्म यज्ञानमिति मंत्रस्य गौतम ऋषिस्त्रिष्टुप्**
**छन्दो ब्रह्मादेवता ब्रह्मावाहने विनियोगः।।**

आवाहन- **एह्येहि विप्रेन्द्र पितामहेश हंसाधिरूढ़ त्रिदशैकवंद्य।**
**श्वेतोत्पलाभास कुशाम्बु हस्त गृहाण पूजां भगवन्नमस्ते।।**

पूजन-**ॐ ब्रह्म यज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेनऽआवः। सबुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः।। स्थूणनागमात्रिकाय ब्रह्म दैवत संज्ञकस्तम्भाय नमः पाद्यादिभिः सम्पूज्य प्रार्थयेत्।।**

**पूजन कर प्रार्थना-कृष्णाम्बरा जिनधरपद्मासन चतुर्भुज।**
**जटाधर जगद्धातः प्रसीद कमलोद्भव।।**

**ॐ सावित्र्यै नमः। ब्राह्म्यै नमः। गङ्गायै नमः।।** पूजन कर स्तम्भ छूकर नागमात्रिकाओ का पूजन- **ॐ ऊर्ध्वऊषुण ऊतये तिष्ठाः देवो न सविता। ऊर्ध्वोवाजस्य सनिता यदञ्जिभिर्वाद्‌यदि्भर्विह्वयामहे। स्तम्भ शिरसि नागमात्रे नमः सम्पूज्य।।**

पूजन कर शाखा बांध दें- **ॐ आयं गौः पृश्निरक्रमीद सदन्मातरं पुरः पितरं च प्रयन्त्स्वः।।** पुनः प्रार्थना कर दें-**ॐ यतोयतः समीहसे ततो नो अभयं कुरु शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः।। वनस्पतिसमुद्‌भूतो निर्मितो विश्वकर्मणाः। स्थिरो भवात्ररक्षार्थं यावत्कार्य समाप्तये।।**

२. विष्णुस्तंभपूजन-**अन्तराग्नेये इदं विष्णुरितिमेधा तिथिर्ऋषि गायत्री छन्दो विष्णु देवता विष्ण्वावाहने विनियोगः।।** (कलश पूजन सब स्तंभो में करें)

आवाहन- **एह्येहि नारायण दिव्यमूर्ते सर्वामरैरर्चितपादपदम्।**
**शुभा शुभानन्द शुचामधीश गृहाण पूजां भगवन्नमस्ते।।**

पूजन-**ॐ इदं विष्णुविचक्रमेत्रेधानिदधे पदम्। समूढमस्यपा ँ सुरे स्वाहा॥ विष्णवे नमः** पूजन कर प्रार्थना-

**देव देव जगन्नाथ विष्णोयज्ञपते विभो।**
**पाहि दुःखाम्बुधेरस्मान् भक्तानुग्रह कारक॥**

**ॐ लक्ष्म्यै नमः। ॐ नन्दायै नमः। ॐ वैष्णव्यै नमः। ॐ ऊर्ध्वऊषुण ऊतये० से यावत्कार्य समाप्तये॥** तक पूरे मंत्र बोलें।

३. रुद्रस्तंभपूजन-**नैर्ऋत्ये नमस्तइति परमेष्ठी ऋषिर्गायत्री छन्दो रुद्रो देवता रुद्रावाहने विनियोगः॥**

आवाहन-**एह्येहि गौरीश पिनाकपाणे शशाङ्कमौले वृषभादिरूढ। देवाधि देवेश महेश नित्यं गृहाण पूजां भगवन्नमस्ते॥**

**पूजन-ॐ नमस्ते रुद्र मन्यवऽउतोत इषवे नमः। बाहुभ्यामुतते नमः॥** पूजन कर प्रार्थना-

**पंचवक्त्र वृषारुढ़ त्रिलोचन सदाशिव।**
**चन्द्रमौले महादेव मम स्वस्ति करोभव॥**

**ॐ माहेश्वर्यै नमः। ॐ गौर्ये नमः। ॐ शोभनायै नमः॥** पुनः **ऊर्ध्व ऊषुण ऊतये०** से यावत कार्य समाप्तये तक पूरे मंत्र बोलें॥

४. इन्द्र पूजन-**वायव्यै त्रातारमिति गर्ग ऋषि त्रिष्टुप छन्दः इन्द्रो देवता इन्द्रावाहने विनियोगः॥**

**आवाहन-एह्येहिवृत्रघ्नगजाधिरूढ सहस्त्रनेत्र त्रिदशैकवन्द्य। शचीपते शक्र सुरेश नित्यं गृहाण पूजां भगवन्नमस्ते॥**

पूजन-**ॐ त्रातार मिन्द्र मवितार मिन्द्र ँ हवे हवे सुहव ँ शूर मिन्द्रम् ह्वयामि शक्रं पुरहूतमिन्द्र ँ स्वस्तिनो मघवाधात्विन्द्रः॥**

इन्द्र का पूजन कर के प्रार्थना-

**देवराज गजारुढ़ पुरंदरशतक्रतौ।**
**वज्रहस्त महावाहौ वांछितार्थप्रदोभवः॥**

**ॐ इन्द्राण्यै नमः। ॐ आनन्दायै नमः। ॐ विभूत्यै नमः॥**

पुनः **ऊर्ध्व ऊषुण ऊतये०** से **यावत्कार्य समाप्तये** तक पूरे मंत्र बोले॥

५. सूर्य पूजन- **बहिरीशाने चित्रमिति कुत्स ऋषि विराट छन्दः सूर्योदेवता सूर्यावाहने विनियोगः।।**

आवाहन-**एह्येहि सप्ताश्व सहस्त्रभानौ सिन्दूरवर्ण प्रतिमावभास! । छायापते सूर्य दिनेश नित्यं गृहाण पूजां भगवन्नमस्ते।।**

पूजन-**ॐ चित्रं देवानां मुदगादनीकंचक्षुर्मित्रस्य वरुणस्याग्नेः। आप्राद्यावापृथिवी अन्तरिक्ष ँ सूर्य आत्मा जगतस्तस्थुषश्च।।**

पूजन कर प्रार्थना-**पद्महस्तरथारूढ पद्मासन सुमङ्गल। क्षमां कुरु दयालो त्वं ग्रहराज नमोस्तु ते।।**

**ॐ सावित्र्यै नमः। ॐ मङ्गलायै नमः। ॐ भूत्यै नमः।।** पूजन कर पुनः **ऊर्ध्व ऊषुण ऊतये०** से **यावत्कर्म समाप्तये** तक पूरे मंत्र बोलें।

६.-**गणेश पूजन-ईशान पूर्वयोर्मध्ये गणानान्त्वेति प्रजापतिर्ऋषि यजुश्च्छन्दो गणपतिर्देवता गणपत्यावाहने विनियोगः।।**

आवाहन- **एह्येहि हेरम्ब महेश पुत्र समस्त विघ्नोघविनाश दक्षः। मांगल्यपूजा प्रथमं प्रधानगृहाण पूजां भगवन्नमस्ते।।**

पूजन कर प्रार्थना- **लम्बोदर नमस्तुभ्यं सततं मोदक प्रिय। अविघ्नं कुरु मे देव सर्व कार्येषु सर्वदा।।**

**ॐ विघ्न हारिण्यै नमः। ॐ जयायै नमः। ॐ सरस्वत्यै नमः।।** पूजन कर पुनः **ऊर्ध्व ऊषुण ऊतये०** से **यावत्कर्म** समाप्तये तक बोलें।।

७- अनन्त पूजन- **पूर्वाग्नयोर्मध्ये नमोस्त्विति देव श्रवाऋषि त्रिष्टुप छन्दो अनन्तो देवता अनन्ता वाहने विनियोगः।।**

**आवाहन-एह्येहि नागेन्द्र धरामरेश नागाङ्गनाकिन्नरगीयमान। अनन्तयक्षोरगलोकसधैर्गृहाण पूजां भगवन्नमस्ते।।**

पूजन-**ॐ नमोऽस्तु सर्पेभ्योः ये केच पृथिवीमनुये अन्तरिक्षे येदिवि तेभ्यः सर्पेभ्यो नमः।। अनन्ताय नमः।**

पूजन कर प्रार्थना-**आशीविष समोपेत नागकन्या विराजित। पाहि यज्ञमिमं देव फणासप्तकमण्डित।।**

**ॐ अधरायै नमः। ॐ पद्मायै नमः। ॐ महापद्मायै नमः।।**

पूजन कर पुनः **ऊर्ध्व ऊतये०** से **यावत्कर्म समाप्तये।** तक बोलें।

८. स्कन्द पूजन-**बाह्याग्नेये यदक्रन्द इति भार्गवजमदग्निदीर्घतमस ऋषि त्रिष्टुप छन्दः स्कन्दो देवता स्कन्दा वाहने विनियोगः॥**

आवाहन-**एह्येहि गौरीसुत देवदेवषट्कृत्तिकारक्षित देह यष्टे। मयूरवाह प्रणतार्तिहारिन् गृहाण पूजां भगवन्नमस्ते॥**

पूजन-**ॐ यद क्रन्दः प्रथमं जायमान उद्यन् समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्यबाहू उपस्तुत्यं महिजातं ते अर्वन्॥ स्कन्दाय नमः॥** पूजन कर प्रार्थना-**मयूरवाहन स्कन्द गौरीसुत षडानन। कार्तिकेय महाबाहो दयां कुरु दयानिधे।**

**ॐ जयायै नमः। ॐ विजयायै नमः। ॐ पश्चिम संध्यायै नमः।**

पूजन कर पुनः **ऊर्ध्वऊषुण ऊतये०** से **यावत्कर्म** समाप्तये। तक बोले।

९. यम पूजन-**आग्नेय दक्षिणयोर्मध्ये यमायत्वेतिदध्यगाथर्वण ऋषिर्यजुश्छन्दो यमो देवता यमावाहने विनियोगः॥**

**आवाहन-एह्येहिवैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते। विशालवक्षः स्थलरुद्ररूप गृहाणपूजां भगवन्नमस्ते॥**

पूजन- **ॐ यमायत्वा मखाय त्वा सूर्यस्य त्वा तपसे देवस्त्वा सविता मध्वा नक्तु पृथिव्यास ॐ स्पृशस्पाहि अर्चिरसि शोचिरसि तपोसि॥ यमाय नमः॥** पूजन कर प्रार्थना-

**धर्मराज महाकाय दण्डहस्त वर प्रद।**
**रक्तेक्षण महाबाहो पाहियज्ञं नमोस्तुते॥**

**ॐ पूर्व संध्यायै नमः। ॐ क्रूरायै नमः। ॐ नियन्त्र्यै नमः॥** पूजन कर पुनः **ऊर्ध्व ऊषुण ऊतये०** से **यावत्कर्म समाप्तये॥** तक बोले॥

१०. वायुपूजन-**दक्षिणनैर्ऋत्यमध्ये वायुरिति वशिष्ठऋषि त्रिष्टुप छन्दो वायु देवता वाय्यावाहने विनियोगः॥**

**आवाहन-एह्येहिवायो मम रक्षणाय मृगाधिरूढ़ः सहसिद्ध संघैः। प्राणाधिपः कालकवेः सहाय गृहाण पूजां भगवन्नमस्ते॥**

पूजन–**ॐ वायुरग्रेगा यज्ञप्रीः साकं गन्मनसा यज्ञं शिवो नियुद्भि शिवाभिः। वायवे नमः॥**
पूजन कर प्रार्थना –

**नमोधरणि पृष्ठस्थ ध्वजधारिन् समीरण।**
**पाहियज्ञमिमं देव प्रसन्नो भव सर्वदा।**

**ॐ तीव्रायै नमः। ॐ गायत्र्यै नमः। ॐ वायव्यै नमः॥** पूजन कर पुनः **ऊर्ध्व ऊषुण ऊतये० से यावत्कर्म समाप्तये।** तक बोलें।

११. सोम पूजन–**नैर्ॠत्ये सोममिति बन्धु ॠषिर्गायत्रीछन्दः सोमो देवता सोमावाहने विनियोगः॥**

आवाहन–**एह्येहिसोमा ध्वर देवदेव विधत्स्व रक्षां भगणेनसार्धम्। सर्वोषधीभीः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते।**

पूजन– **ॐ सोम ँ राजा नमवसेऽग्नि मन्वार भामहे आदित्यान् विष्णु ँ सूर्य ब्रह्माण च बृहस्पति ँ स्वाहा॥ सोमायनमः॥**

प्रार्थना– **क्षीरार्णव समुद्भूतं द्विजराज सुधाकर।**
**सोम त्वं सोम्य भावेन ग्रहपीणां निराकुरु॥**

**ॐ सावित्र्यै नमः। ॐ अमृतकलायै नमः। ॐ विजयायै नमः॥**
पूजन कर पुनः **ऊर्ध्व ऊषुण ऊतये० से यावत्कर्म समाप्तये।** तक बोले॥

१२. वरुण पूजन–**पश्चिमनैर्ॠत्यमध्ये इमं मे वरुणेति वत्सॠषिर्बृहतीछन्दो वरुणो देवता वरुणावाहने विनियोगः॥**

आवाहन–

**एह्येहि यादो गणवारि धीशं प्रजन्य देवप्सरसा गणेन।**
**विद्याधरेन्द्रामरगीयमाना गृहाण पूजां भगवन्नमस्ते॥**

पूजन–**ॐ इम मे वरुण श्रुधि हवमद्या च मृडय त्वाम वस्युराचके। वरुणाय नमः।** पूजन कर प्रार्थना–

**शंखस्फटिक वर्णाभश्वेतहाराम्बरा वृत।**
**पाशहस्त महाबाहो वरुण त्वं दयां कुरु॥**

**ॐ वारुण्यै नमः। ॐ बार्हस्पत्यै नमः। ॐ पाशधारिण्यै नमः॥**

पूजन कर पुनः-**ऊर्ध्व ऊषुण ऊतये०** से **यावत्कर्म समाप्तये** तक बोले-

१३. वसुपूजन-**पश्चिम वायव्य मध्ये सुगाव इति वशिष्ठ ऋषिर्गायत्री छन्दो वसुर्देवता वस्वावाहने विनियोगः॥**

आवाहन-**एह्येहि देवेश्वर दिव्यदेह वसो प्रसन्नात्म दृगष्ट मूर्ते। ममास्य यागस्य सुरक्षणार्थं गृहाण पूजा भगवन्नमस्ते॥**

पूजन-**ॐ सुगावो देवाः सदना ऽअकर्म्मय आजग्मेद ॐ सर्वनं जुषाणाः। भरमाणा वहमाना हवि ॐ ष्यस्मै धत्त वसवो वसूनि स्वाहा। वसवे नमः॥** पूजन कर प्रार्थना-

**दिव्य वस्त्राष्टमूर्त्ते त्वं दिव्य देह धर प्रभो॥**
**पाहि यज्ञ मिमं देव वरदं त्वां नमाम्यहम्॥**

**ॐ विनितायै नमः। ॐ गरिमायै नमः। सम्भूत्यै नमः॥** पूजन कर पुनः **ऊर्ध्व ऊषुण ऊतये०** से **यावत्कर्म समाप्तये** तक बोलें।

१४. कुबेर पूजन-**वायव्ये सोमोधेनुमिति गौतम ऋषि स्त्रिष्टुप्छन्दो धनदो देवता धनदावाहने विनियोगः॥**

आवाहन- **एह्येहि रक्षोगणनायक त्वं विशाल वेताल पिशाच संघैः।**
**ममाध्वरं पाहि कुवेरदेव गृहाण पूजां भगवन्नमस्ते॥**

पूजन-**ॐ सोमो धेनुॐ सोमोअर्वन्तमाशु ॐ सोमो वीरं कर्मण्यं ददाति। सादन्यं विदथ्य ॐ सभेयं पितृश्रवणं यो ददाशदस्मै। धनदाय नमः॥** पूजन कर प्रार्थना-

**दिव्य देह धनाध्यक्ष पीतहाराम्बरावृत।**
**उत्तरेश महाबाहो वांच्छितार्थ प्रदोभव॥**

**ॐ आदित्यै नमः। ॐ सिनीवाल्यै नमः। ॐ लघिमायै नमः।** पूजन कर पुनः **ऊर्ध्व ऊषुण ऊतये०** से **यावत्कर्म समाप्तये** तक बोले।

१५. बृहस्पति पूजन-**उत्तरवायव्य मध्ये बृहस्पत इति गृत्समद ऋषि त्रिष्टुप्छन्दो बृहस्पति देवता बृहस्पत्या वाहने विनियोगः॥**

आवाहन-**एह्येहि देवेन्द्र गुरो मखेशं बृहस्पते यज्ञपते सुयागे।**

**रक्षार्थमंत्रोपविशानुकंपिन् गृहाण पूजां भगवन्नमस्ते।।**

पूजन-

**ॐ बृहस्पते अतियदर्यो अर्हा द्युमद्विभाति क्रतुमज्जनेषु। यद्दी दयच्छवस ऋत प्रजात् तदस्मांसुद्रविणं धेहि चित्रम्।। बृहस्पतये नमः।।**

प्रार्थना- **देवाचार्य यथा शक्त्या पूजितोसिमयामुदा।**
**क्रूरग्रहोपशान्ति त्वं कुरु नित्यं नमोस्तु ते।।**

**ॐ पौर्णमास्यै नमः। ॐ वेदमात्रे नमः। सन्नत्यै नमः** पूजन- कर पुनः **ऊर्ध्व ऊषुण ऊतये०** से **यावत्कर्म समाप्तये** तक बोलें।

१६. विश्वकर्मा पूजन-

**उत्तरेशानयोर्मध्ये विश्वकर्मन्निति शास ऋषि त्रिष्टुछन्दो विश्वकर्मा देवता विश्वकर्मावाहने विनियोगः।।**

आवाहन-

**एह्येहि शिल्पीश्वर विश्वकर्मन् मूर्त्यादिनिर्माण करैक मुख्य।**
**दोर्दण्ड संसाधित विश्वकर्मन् गृहाण पूजां भगवन्नमस्ते।।**

पूजन-**ॐ विश्वकर्मन् हविषां वर्धनेन त्रातारमिन्द्रम कृणोरवध्यम् तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथा सत्।। विश्वकर्मण्यै नमः।।**

पूजन कर प्रार्थना-

**विश्वकर्मन् प्रसीदत्वं शिल्पशास्त्र विशारद।**
**दण्डपाणै महाबाहौ तेजोमूर्ति धर प्रभो।।**

**ॐ वास्तु देवतायै नमः। ॐ वैश्वकर्मण्यै नमः। ॐ शारदायै नमः।** पूजन कर पुनः **ऊर्ध्व ऊषुण ऊतये०** से **यावत्कर्म समाप्तये।** तक बोले।।

## ।। योगिनी पूजनम् ।।

आग्नेय कोण में वेदी को लाल वस्त्र से ढक कर उसके ऊपर नौ रेखाऐं पूर्व से पश्चिम की ओर तथा नौ-रेखायें दक्षिण से उत्तर की ओर देवें जो चौसठ कोष्ट बनेंगे उसके ऊपर कलश स्थापित कर योगिनी का पूजन किया जाता है योगिनी पूजन के लिये आचार्य यजमान से संकल्प करावे -

**देशकालौ स्मृत्वा अस्मिन् कर्मणि सर्वारिष्ट निवार्णार्थं अमुक देवता प्रतिष्ठायाः साङ्गता सिद्ध्यर्थ महाकाली महालक्ष्मी-महासरस्वती सहितानां चतुः षष्ठियोगिनीनां पूजनं करिष्ये॥**

संकल्प कर योगिनी प्रतिमा का अग्न्युत्तारण निम्न मंत्र से करें-

**अग्न्युत्तारण**

**ॐ अश्मन्नूर्ज पर्वते शिश्रियाणामद्भ्य ऽओषधीभ्यो वनस्पतिभ्योऽअधि सम्भृतं पयः॥ तां न ऽइषमूर्जं धत्त मरुतः स ᳪ रराणा ऽ अश्मँस्ते क्षुन् मयि तऽ ऊर्ग्यं द्विष्मस्तं ते शुगृच्छतु॥**

योगिनी प्रतिमा का अग्न्युत्तारण कर गन्धक्षतादि से पूजन कर वेदी के ऊपर स्थापित कर देवें तत्पश्चात् महाकाली महालक्ष्मी महासरस्वती का आवाहन करें-

**ॐ अम्बे ऽअम्बिके ऽम्बालिके नमानयति कश्चन॥**
**ससस्त्यश्वकः सुभाद्रिकाङ्काम्पीलपासिनीम्॥**
**ॐ श्रीश्चते लक्ष्मी श्च पत्न्या वहो रात्रे पार्श्वे नक्षत्राणि**
**रूपमाश्विनौव्यात्तम्॥**
**इष्णन्निषाणा मुम्मऽइषाण सर्वलोकम्म ऽ इषाण॥२॥**
**ॐ पावकानकः सरस्वती वाजेभिर्व्वाजिनीवती।**
**यज्ञं वष्टुधियावसुः ॥३॥**

महाकाली महालक्ष्मी महासरस्वती का पूजन (श्री सूक्त) से कर लेवें। तत्पश्चात चौसठ योगिनियों का पूजन करें।

**योगिनी आवाहन -**

**योगे योगे तवस्तरं वाजे वाजे हवामहे। सखाय इन्द्र मूर्तये॥ चतुः षष्ठि योगिनी देवेभ्यो नमः॥ नाम मंत्र से आवाहन -**

**ॐ तमीशानं जगत स्तस्थुषस्प्पतिं धियं जिन्वमवसे हूमहेव्वयम्॥ पूषानो यथाव्वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये॥ गजाननायै नमः॥ गजाननामावाहयामि॥ स्थापयामि॥**

ॐ आब्रह्मन् ब्रह्मणो ब्रह्मवर्च्चसी जायतामाराष्ट्रे राजन्यः शूर ऽइष व्योऽति व्याधि महारथो जायतान्दोग्ध्री धेनुर्व्वोढान ड्वानाशुः सप्तिः पुरन्ध्रिर्य्योषा जिष्णूरथेष्ठाः सभेयो युवास्य यजमानस्य व्वीरो जायतां निकामे निकामे नः पर्ज्जन्यो व्वर्षतु फलवत्यो न ऽओषध यः पच्यन्तां योगक्षेमो नः कल्पताम्।। सिंहमुख्यै नमः।। सिहमुखी मावाहयामि।। स्थापयामि।।२।।

ॐ महाँ२ऽइन्द्रो व्वज्रहस्तः षोडशी शर्म्म यच्छतु।। हन्तु पाप्मानं य्योऽमान्द्वेष्टि।। उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्रीय त्वा।। गृध्रास्यायै नमः।गृध्रास्या मावाहयामि।। स्थापयामि।।३।।

ॐ सद्योजातोव्यमिमीत यज्ञमग्निर्देवानाम भवत्पुरोगाः।। अस्य होतुः प्रदिश्यृ तस्यवीचि स्वाहा कृत ॐ हविरदन्तु देवाः।। काकतुण्डिकायै नमः।। काकतुण्डिकामावाहयामि।। स्थापयामि।।४।।

ॐआदित्यङ्ग भर्म्पयसासमङ्धिसहस्त्रस्यप्रतिमांव्विश्वरूपम्।। परिवृङ्धिहरसामाभिम ॐ स्त्थाः शतायुषङ्कृणुहि च्चीयमानः।। उष्ट्रग्रीवायै नमः।। उष्ट्रग्रीवामावाहयामि।। स्थापयामि।।५।।

ॐ स्वर्णधर्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्णशुक्रः स्वाहा स्वर्ण ज्ज्योतिः स्वाहा स्वर्णसूर्य्यः स्वाहा। हयग्रीवायै नमः हयग्रीवामावाहयामि।। स्थापयामि।।६।।

ॐ सत्यञ्च मे श्रद्धा च मे जगच्च मे धनञ्च मे विश्व श्च मे महच्चमे क्रीडा च मे मोदश्च मे जातश्च मे जनिष्यमाणश्च मे सूक्तश्च मे सुकृतश्च मे यज्ञेन कल्पन्ताम्।। वाराह्यै नमः।। वाराहीमावाहयामि।। स्थापयामि।।७।।

ॐ भार्यैदार्व्वाहारम्प्रभायाऽ अग्न्ये धम्ब्रध्नस्यव्विष्टपायाभिषेक्तारं वर्षिष्ठ्ठाय नाकाय परिवेष्टारन्देवलोकाय पेशितारम्मनुष्यलोकाय प्प्रकरितार ॐ सर्वेभ्यो लोकेब्भ्यऽउपसेक्तारमव ऽ ऋत्यैव्वधा-योपमन्थितारम्मेधायव्वासः पल्पूलीम्प्रकामायरजयित्रीम्।। शरभाननायै नमः।। शरभान नामावाहयामि।। स्थापयामि।।८।।

ॐ जिह्वामे भदद्रं व्वाङ्महो मनो मन्युः स्वराड्भामः।। मोदाः प्रमोदाऽअङ्गुलीरङ्गानि मित्रम्मे सहः।। उलूकिकायै नमः।। उलूकिकामावाहयामि।। स्थापयामि।।९।।

ॐ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहाऽवक्रन्दाय स्वाहा प्प्रोथते स्वाहा प्रप्पोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहा स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा व्वल्गते स्वाहा सीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्ग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा बिजृम्भमाणाय स्वाहा व्विचृताय स्वाहाऽस ँ हानाय स्वाहोपस्स्थिताय स्वाहाऽ यनाय स्वाहा प्प्रायणाय स्वाहा।। शिवारावायै नमः।। शिवारावामावाहयामि।। स्थापयामि।।१०।।

ॐ अग्निश्च मे घर्म्मश्च मे ऽर्क्कश्च मे सूर्य्यश्च मे प्प्राणश्चश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्क्वरयो दिशश्च मे यज्ञेन कल्पन्ताम्।। मयूरायै नमः।। मयूरामावाहयामि।। स्थापयामि।।११।।

ॐ पूषन्तवव्व्रतेव्वयन्नरिष्येम कदाचन।। स्तोतारस्यऽइहस्मसि।। विकटाननायै नमः।। विकटाननामावाहयामि।। स्थापयामि।।१२।।

ॐ व्वेद्याव्वेदिःसमाप्यते बर्हिषावर्हिरिन्द्रयम्।। यूपेन यूप ऽ आप्यतेप्प्रणीतोऽ अग्निरग्निना। अष्टवक्त्रायै नमः।। अष्टवक्त्रा-मावाहयामि।। स्थापयामि।।१३।।

ॐ अयमग्निः सहस्त्रिणोव्वाजस्य शतिनस्प्पतिः।। मूर्द्धाकवीरयीणाम्।। कोटराक्ष्यै नमः।। कोटराक्षीमावाहयामि।। स्थापयामि।।१४।।

ॐ इमम्मे व्वरुणश्श्रुधी हवमद्या च मृडय।। त्वामवस्युराच के।। कुब्जायै नमः।। कुब्जामावाहयामि।। स्थापयामि।।१५।।

ॐ यमाय त्वा मखाय त्वा सूर्य्यस्य त्वा तपसे।। देवस्त्वा सविता मद्ध्वा नक्तु पृथिव्याः स ँ स्पृशस्प्पाहि।। अर्चिरसि शोचिरसि तपोसि।। विकटलोचनायै नमः।। विकटलोचनामावाहयामि।। स्थापयामि।।१६।।

ॐ यमेन दत्तं त्रितऽएनमायुनगिन्द्रऽएनं प्रथमोऽ अध्य तिष्टत्॥ गन्धर्वोऽअस्य रशनामगृभ्णात्सूरादश्वं व्वसवोनिरतष्ट॥ शुष्कोदर्यै नमः॥ शुष्कोदरीमावाहयामि॥ स्थापयामि॥१७॥

ॐ मित्रस्य चर्षणीधृतो वो देवस्य सानसि॥ द्युम्नश्चित्र-श्रवस्तमम्॥ ललजिह्वायै नमः॥ ललजिह्वामावाहयामि॥ स्थापयामि॥१८॥

ॐ अग्ने ब्रह्म गृभ्णीष्व धरुणमस्यन्तरिक्षंन्दृ ᳪ हब्रह्मवनित्वाक्षत्रवनि सजातवन्युपदधामिभ्रातृव्यस्यव्वधाय॥ धर्त्रमसि दिवं दृᳪ व्रह्मवनित्वा क्षत्रवनि सजातवन्युपदधामिभ्रातृव्यस्यवधाय। विश्वाभ्यस्त्वा शाभ्य ऽ उपदधामिचितस्थोर्ध्व चितोभृगूणामङ्गिरसान्त पसातप्यध्वम्॥ श्वदंष्ट्रायै नमः॥ श्वदंष्ट्रामावाहयामि॥ स्थापयामि॥१९॥

ॐ भगप्प्रणेतर्भग सत्यराधोभगे मान्धियमुदवाददन्नः॥ भगप्प्रनोजनयगोभिरश्वैर्भगप्प्रनृभिर्नृवन्तः स्याम॥ वानराननायै नमः॥ वानराननामावाहयामि॥ स्थापयामि॥२०॥

ॐ सुपर्णोसि गरुत्माँस्त्रिवृतेशिरो गायत्रं चक्षुर्बृहद्द्रथन्तरे पक्षौ। स्तोम ऽआत्मा छन्दा ᳪ स्यङ्गानि यजू ᳪ षिनाम सामते तनूर्व्वाम देव्यं यज्ञायज्ञियं पुच्छन्धिष्ण्याः शफाः सुपर्णो ऽसि गरुत्मान्दिवङ्गच्छस्वः पत॥ ऋक्षाक्ष्यै नमः ऋक्षाक्षिवाहयामि स्थापयामि॥२१॥

ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वध ायिभ्यः स्वधा नमः प्रतिपामहेभ्यः स्वधायिभ्यः स्वधा नमः॥ अक्षन्पितरोमीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम्। केकराक्ष्यै नमः॥ केकराक्षीमावाहयामि॥ स्थापयामि॥२२॥

ॐ यातेरुद्रशिवातनूरधोरा पापकाशिनी। तयानस्तन्वा सन्तमयागिरिसन्ताभिचाकशीहि॥ बृहत्तुण्डायै नमः॥ बृहत्तुण्डा-मावाहयामि स्थापयामि॥२३॥

ॐ व्वरुणः प्राविता भुवन्मित्त्रोव्विश्वाभिरूतिर्भिः॥ करतान्नः सुराधसः॥ सुरप्रियायै नमः॥ सुरप्रियामावाहयामि॥ स्थापयामि॥२४॥

ॐ ह ꣳ सः शुचिषद्वसुरन्तरिक्षसद्धोताव्वेदिषदतिथिर्दुरोणसत्॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत्॥ कपालहस्तायै नमः॥ कपालहस्तामावाहयामि॥ स्थापयामि॥२५॥

ॐ सुसन्दृशन्त्वाव्वयमघवन्वन्द्विषीमहि॥ प्रनूनम्मपूर्ण बन्धु रस्तुतोया सिव्वशी २ऽ अनुयोजान्विन्द्र ते हरी॥ रक्ताक्ष्यै नमः॥ रक्ताक्षीमावाहयामि॥ स्थापयामि॥२६॥

ॐ प्रतिपदसिप्प्रतिपदे त्वा नुपदस्यनुपदेत्वा सम्पदसि सम्पदेत्वातेजो सि तेजसे त्वा॥ शुषक्यै नमः॥ शुष्कीमावाहयामि॥ स्थापयामि॥२७॥

ॐ देवीरापोऽ अपान्नपाद्योव ऽऊर्म्मिर्हविष्यऽइन्द्रियावान मदन्तिमः॥ तन्देवेभ्यो देवत्रादत्त शुक्रपेभ्यो येषां भागस्थ स्वाहा॥ श्येन्यै नमः॥ शेनीमावाहयामि॥ स्थापयामि॥२८॥

ॐ देवीरापोऽअपान्न पाद्योवऽऊर्मिर्हविष्य ऽइन्द्रियावान्न-मदिन्तमः। तन्देवेभ्यो देवत्रादत्त शुक्रपेब्भ्यो येषाम्भागस्थ स्वाहा॥ कपोतिकायै नमः॥ कपोतिकामावाहयामि॥ स्थापयामि॥२९॥

ॐ श्रीश्चते लक्ष्मीश्चपत्न्या वहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्॥ इष्णन्निषाणामुम ऽइषाण सर्व्वलोकम्म ऽइषाण। पाशहस्तायै नमः॥ पाशहस्तामावाहयामि॥ स्थापयामि॥३०॥

ॐ भुवो यज्ञस्य रजस श्चनेता यत्रानियुद्भिः सचसेशिवाभिः॥ दिवि मूर्द्धानन्दधिषेस्वर्षांजिह्वामग्ने च कृषेहव्यवाहम्॥ दण्डहस्तायै नमः॥ दण्डहस्तामावाहयामि॥ स्थापयामि॥३१॥

ॐ कदाचनस्तरीरसिनेन्द्रसश्चसिदाशुषे॥ उपोपेन्नुमघवन्नभूयऽ इन्नुतेदानन्देवस्यपृच्यते॥ प्रचण्डायै नमः॥ प्रचण्डामावाहयामि॥ स्थापयामि॥३२॥

ॐ भद्रंकर्णेभिः श्रृणुयाम देवा भद्रम्पश्येमाक्षभिर्य्यजत्राः॥ स्थिरैरङ्गैः स्तुष्टुवा ꣳ सस्तनूभिर्व्यशेमहि देव हितं यदायु॥ चण्डविक्रमायै नमः॥ चण्डविक्रमावाहयामि॥ स्थापयामि॥३३॥

ॐ इषेत्वोर्जेत्वा वायवस्थ देवोवः सविता प्रार्प्पयतु श्रेष्ठतमाय

